# हयग्रीवी शिक्षा

## Hayagrivi Shiksha




# ऋग्वेद शिक्षा - ५

## Rig Veda Shiksha Series - 5

# हयग्रीवी शिक्षा

श्रीगणेशाय नमः ।

मूलहयग्रीवी शिक्षा लिख्यते

क्रमे यथोक्ते पदजातमेव द्विरभ्यसेदुत्तरमेव पूर्वम्
अभ्यस्य पूर्वं च तथोत्तरे पदेऽवसानमेवं हि जटा विधीयते १
त्रिभिः पदैः स्यात्क्रमको यत्र तत्र
मध्यं त्वनभ्यस्य च पूर्वमभ्यसेत्
अर्थाच्च मध्यस्य भवेद् द्विरुक्तिता
संदेहदं त्विङ्गनतः प्रदर्शयेत् २
अभिक्रमे क्रमशास्त्रं प्रमाणं
स्याद् व्युत्क्रमे व्याकरणं प्रधानम्
उत्क्रमे व्युत्क्रमणे विशेषः
स्वराः प्रकारद्वितयेप्यभिन्नाः ३
चतुःक्रमे त्रिक्रमवत् परीत्य
संदर्शयेन्मध्यपदस्य रूपम्
तथेङ्गयेत्पदजातं विकारि
व्यावर्तने संहितावत्प्रगृह्य ४
ऋते क्रमं द्वैपदसंहितास्वर-
ज्ञानं न चेति क्रमकप्रयोजनम्
तथान्यतः पदसंधेर्विशेषितः
स्वराभिधाने हि जटा प्रयोजिका ५
क्रमस्वरेणैव जटासु भूयते
समज्यतेऽतोत्र न तिङ्ङतिङ्विधिः
स्वराभिधेया हि यथाश्रुतैः स्वरैः
पदेष्वथामन्त्रितजातिकेष्वपि ६

इति जटापटले प्रथमो वर्गः

अथ द्वितीयो वर्गः

मध्यस्वरस्त्रिक्रमे यत्र लुप्यते
व्यावर्तने तद्ग्रहणं च सर्वतः
स्यादन्यथा विग्रहणे प्रयोजनं
किं वाभिजाते पदनिश्चये तदा ७
संधिर्निपातस्य कदापि नोक्तस्
तथापि पूर्वेण जटासु दृष्टः
स्वरा हि सर्वे क्रमवद्विधेयाः
कम्पा अपि स्युः स्वरसंधिजाश्च ८
अर्धर्चान्त्यं पदमेकं प्रदृश्यते
तदा तदभ्यस्य विरम्य चेङ्गयेत्
ऋच्येकमेव प्रकटं पदं भवेत्
परेण साकं परिवर्तनं तदा ९
ओकार आमन्त्रितजोपि दृष्टः
संधीयमानो न तु संहितायाम्
स्वरे परेऽकारवर्जं जटायाम्
उपैति संधिं न परो विशेषः १०
अनानुपूर्व्येण च यत्र संहिता
पदक्रमाद् व्युत्क्रमणं पुनः क्रमः
भवेत्प्रकारोऽयमनादिरुत्तमः
सदा जटाया इति सर्वसंमतत् ११

इति द्वितीयो वर्गः
मूलशिक्षा समाप्ता